'अयं धनकर्मा पूर्वं महाकृपणोऽभूत् । अधुना तु दानगुणेन न कोऽपि अनेन सदृशो ज्ञातोऽस्ति' । अतो हे श्रेष्ठिन् ! मया यदुक्तं तत् सर्वं सत्यं जानीहि । ममाऽसत्यजल्पने कोऽवसरः ? । यथा दृष्टं तथैवोक्तं मया, नात्र सन्देहः कार्यः । न्यूनाधिकं किमप्यहं न वेद्मि । कल्याणमस्तु तव, अहं यामि" । इत्युक्त्वा याचको गतः । श्रेष्ठिना चिन्तितम्—'इयं वार्ता तु उत्पातसदृशाऽसम्भावनीया, न केवलम् असत्याऽपि भवेत्, किञ्चिद् न्यूनाधिका तु भविष्यति, परं न मूलतोऽसत्या । अतोऽहं शीघ्रं यामि, चेत् कार्यं भविष्यति पुनरागमिष्यामि' । इति ध्यात्वा तद्दिनशेषे चलितो मार्गे कस्मिश्चिद् ग्रामे उषितः, परं रात्रौ आर्तियोगाद् निद्रा नागता । आर्त्या रात्रिमतिवाह्य प्रभाते स्वपुरसम्मुखं चलितः । तदा कपटधनकर्मणा दैवप्रयोगेण ज्ञात्वा अग्रत एव द्वारपालकेभ्य उक्तम्—"भोः सेवका ! अधुनाऽत्र नगरे बहुरूपिणो धूर्ता आगताः सन्ति । लोकान् विविधधूर्तकलया धूर्तयन्ति । केचित्तु कस्यापि गृहस्वामिनः सदृशं रूपं कृत्वा गृहान्तः प्रविश्य गृहसारं लात्वा गच्छन्ति । अतः सावधानतया स्थेयं, कोऽप्यज्ञातो गृहान्तर्विशन् वारणीयः' । अथ मध्याह्ने जाते मूलधनकर्मा स्वपुरं प्राप्तः, पुरं प्रविशन् लोकैर्दृष्टः । तं च दृष्ट्वा परस्परम् उपकर्णमागत्य कथयन्ति—'अहो ! अद्यायं धनकर्मा मूलवेषादि कृत्वा पादचारी च भूत्वा कुत आगच्छति ?' । इत्युक्ते एकेनोक्तम्—'नायं धनकर्मा, कोऽपि धनकर्मसमानरूपः पथिको याति' । एकेनोक्तम्—'त्वं सत्यं वदसि ! । यतो मयाऽद्यैव प्रभाते सुखासनाधि-

सत्य प्रतिभाति'। इत्येव कोलाहलं श्रुत्वा वृद्धपुत्रो बहिरागत । त दृष्ट्वा गृहपारगोक्ता—'ओ
वत्स ! त्वया गृहान्त क सगृहीत ?'। इत्युक्ते सोऽपि विभ्रमे पतितश्चिन्तयति—'कोऽप्युपाविष्ट
स्थित ?'। इति चिन्तयता मौनमाधाय गृहान्तर्गत्वा कूटधनकर्मणोऽग्रे सर्वो व्यतिकरो ज्ञापित।
सोऽप्युत्थाय 'मया ह्योदिने कथितं नाऽभूद् ग्रामे धूर्ता समागता सन्ति ?, तन्मध्यात् कोऽप्या-
गतो भविष्यति!। परन्तु असत्य कथ निरीक्ष्यति ?' इति वदन् बहिरागत । सेवका सर्वेऽप्युत्थि-
ता । अथ कूटेन मूलश्रेष्ठिने उक्तम्—'कुत आगतोऽसि ?, रे धूर्त! कस्य गृहान्त प्रवेष्टुमिच्छसि ?'।
मूलधनकर्माऽवदत्—'अहमेव अस्य गृहस्य स्वामी, मदीया सम्पत्तिर्बहुतरकष्टेन मेलिताऽस्ति । परं त्वं
कः ? यद् धूर्तकलया गृहान्त प्रविश्य मम धनं लुण्टयसि ?। अतो नि सर बहिश्चतुष्पथे साधुका-
राऽभ्यर्णे, यथा आवयोः सत्यासत्यविभागो भवेत्। चौरस्य गतिश्चौर एव भवति'। कूटेनोक्तम्—'गृह-
स्थित साधुकार, बहि स्थितो धूर्त, इति सर्वे जानन्ति। अत उपराजं गत्वा, तव धूर्तस्य मुख
भ्रंशयित्वा, सर्वसमक्षं रासभारोहणपूर्वक विगोप्य देशाद् निष्कासयिष्यामि'। एवं विवदमानाभ्यां
चतुष्पथे गत्वा साधुकारान् सम्मेल्य तेषामग्रे उभाभ्यां स्वस्वदु खमुक्तम्। अथ तत्र चतुष्पथे समस्त-
नगरवासिनो लोकाश्चित्रकृद्वार्ता श्रुत्वा सविस्मयमागता । तत्र ये दुर्जनास्ते धनकर्मद्वय दृष्ट्वा हर्षम्
ऐयरु, ये च सज्जनास्ते खेदं गता—'हा ! संसारे कर्मणां विचित्रा गति, उदयगतिं च विषमां